इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ ४ ॥

एको देवः केशवो वा शिवो वा
एकं मित्रं भूपतिर्वा यतिर्वा ।
एको वासः पत्तने वा वने वा
एका भार्या सुन्दरी वा दरी वा ॥ ५ ॥

कमठकुलाचलदिग्गजफणिपतिविधृतापि चलति वसुधेयम् ।
प्रतिपन्नममलमनसां न चलति पुंसां युगान्तेपि ॥ ६ ॥

किं कूर्मस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष य-
त्किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः ।
किंत्वङ्गीकृतमुत्सृजन्न मनसा श्लाघ्यो जनो लज्जते
निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥ ७ ॥

को न याति वशं लोके मुखे पिण्डेन पूरितः ।
मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥ ८ ॥

क्षुद्राः सन्ति सहस्रशः स्वभरणव्यापारमात्रोद्यताः
स्वार्थो यस्य परार्थ एव परमो नैकः सतामग्रणीः ।
दुःपूरोदरपूरणाय पिबति स्रोतःपतिं वाडवो
जीमूतस्तु निदाघसंभृतजगत्संतापविच्छित्तये ॥ ९ ॥

---

(*d*) °ने; °ताम्. K

V. In D. the third and fourth lines interchange places. In M. the fourth is second, the second third, and the third fourth.

VII. (*a*) °त्येष यन्; त्येव यः. M. (*b*) °रा°; °र°. Be.n. यन्नि; योनि°. M. (*c*) त्व° ना°; M. R. N. C. न्न मनसा; °न्स्वमनसा. D. °न्मम° noted in R. commentary °ञ्जन इव. P. R. °न्न महसा (Prima manu °न्न महसा secunda manu ) in Bo.n. & Be.n. (*d*) °षु; °नि M. P. R. Bo.n. वि ( नि?) D.

दूरादर्थं घटयति नवं दूरतश्चापशब्दं
त्यक्त्वा भूयो भवति निरतः सत्सभारञ्जनेषु ।
मन्दंमन्दं रचयति पदं लोकचित्तानुवृत्त्या
कामं मन्त्री कविरिव सदा खेदभारैरमुक्तः ॥ १० ॥

दैवेन प्रभुणा स्वयं जगति यद्यस्य प्रमाणीकृतं
तत्तस्योपनमेन्मनागपि महान्नैवाश्रयः कारणम् ।
सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं
सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोबिन्दवः ॥ ११ ॥

परिचरितव्याः सन्तो यद्यपि कथयन्ति न सदुपदेशम् ।
यास्त्वेषां स्वैरकथास्ता एव भवन्ति शास्त्राणि ॥ १२ ॥

प्रायः कन्दुकपातेनोत्पतत्यार्यः पतन्नपि ।
तथा त्वनार्यः पतति मृत्पिण्डपतनं यथा ॥ १३ ॥

यदि नाम दैवगत्या जगदसरोजं कदाचिदपि जातम् ।
अवकरनिकरं विकिरति तत्किं कृकवाकुरिव हंसः ॥१४॥

यन्नागा मदभिन्नगण्डकरटास्तिष्ठन्ति निद्रालसा
द्वारे हेमविभूषणाश्च तुरगा वल्गन्ति यद्दर्पिताः ।

X. (b) त्यक्त्वा; कृत्वा M. °रञ्ज°, °रञ्जन. K. °सभारञ्जनेषु, °सभापादनेषु M. °त्कथापादनेषु P. R. (c) °वृ°; °र° D. (d) °व°, °वे° D.

XI. (a) °स्य; °स्त Bo. (orig. Bo.n.) (b) °म°: °थे° K. Bo. Be. M. (c) °रके; °रिने Bo. (orig. Bo.n.) Be.n [illegible] Bo.n.

XII. (b) यद्यपि कथयन्ति न सदुपदेशम्, यद्यप्युपदिशन्ति न S. यद्यपि कथयन्ति वा सदुपदेशम. Bo. (c) °वे°; °वे° S.

XIII. (a) प्रायः; यथा N. °तेन°; °न° K. M. (b) पतनम; मृत्तिका R.

XV. (a) भिन्नगण्ड; वारिभिन्न° P. R. (b) हेम; स्वर्ण; P. R. °पणा°; वि-ना° P. R. Bo.n. (orig. Bo.) [illegible]; [illegible] Bo.n. (L.) [illegible] Bo.n. (K.) (orig. Bo.)

वीणावेणुमृदङ्गशङ्खपटहैः सुप्तस्तु यद्बोध्यते
  तत्सर्वं सुरलोकदेवसदृशं धर्मस्य विस्फूर्जितम् ॥ १५ ॥

ये संतोषसुखप्रमोदमुदितास्तेषां न भिन्ना मुदो
  ये त्वन्ये धनलोभसंकुलधियस्तेषां न तृष्णा हता ।
इत्थं कस्य कृते कृतः स विधिना तादृक्पदं संपदां
  स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥ १६ ॥

रक्तत्वं कमलानां सत्पुरुषाणां परोपकारित्वम् ।
  असतां च निर्दयत्वं स्वभावसिद्धं त्रिषु त्रितयम् ॥ १७ ॥

वचो हि सत्यं परमं विभूषणं
  गजाङ्गनाया कृशता तथा ।
द्विजस्य विद्यैव पुनस्तथा क्षमा
  शीलं हि सर्वस्य नरस्य भूषणम् ॥ १८ ॥

वरं तुङ्गाच्छृङ्गाद्गुरुशिखरिणः क्वापि पुलिने
  पतित्वायं कायः कठिनदृषदन्तर्विदलितः ।
वरं न्यस्तो हस्तः फणिपतिमुखे तीव्रदशने
  वरं वह्नौ पातस्तदपि न कृतः शीलविलयः ॥ १९ ॥

---

(*c*) °टहैः; °णवैः P. R. Bo.n. (orig. Bo.) °स्तु; °थ Bo. n. (orig. Bo.) (*d*) देव; सिद्धि. T. R. राज्य. Bo.n. (orig. Bo.)

XVI. (*a*) सुखप्रमोद; निरन्तरप्र.° N. °षां न; °षाम.° D. (*b*) लोभ; लुब्ध. M. P. R. N. °यस्ते°; याते° M. (*d*) स्वात्मन्येव समाप्त°; स्वामिन्येवसमस्तेन°. D. (स्वामिन्येव समान?).

XVII. (*b*) सत्पु°; सुपु° K. (सुपु?)

XIX. (*a*) तुङ्गाच्छृङ्गा°; शृङ्गोत्तुङ्गा°; M. P. R. Bo.n. D. (where त्तु for त्तु) शृङ्गोत्संगा°. N. °द्गुरु; °द्गर. M. °णः; °णाम्. D. पुलिने; विषमे D. Bo.n. N. M. विषये. P. R. (*b*) °न्तर्विद°; °न्तर्विग°. D. Bo.n. °न्ते विग° N. (*c*) °व्र° ; °क्ष्ण°; D. P. R. M. N. Be. (orig. Be.n.) Bo.n. (orig. Bo.)

विरम विरसायासादस्माद्दुरध्यवसायतो
विपदि महतां धैर्यध्वंसं यदीक्षितुमीहसे ।
अपि जडमते कल्पापायेऽप्यपेतनिजक्रमाः
कुलशिखरिणः क्षुद्रा नैते न वा जलराशयः ॥ २० ॥

स्पृहयति भुजयोरन्तरमायतकरवालकररुहविदीर्णम् ।
विजयश्रीर्वीराणां व्युत्पन्नप्रौढवनितेव ॥ २१ ॥

अयममृतनिधानं नायकोऽप्योषधीनां
शतभिषगनुयातः शम्भुमूर्ध्नोऽवतंसः ।
विरहयति न चैनं राजयक्ष्मा शशाङ्कं
हतविधिपरिपाकः केन वा लङ्घनीयः ॥ २२ ॥

शुभ्रं सद्म सविभ्रमा युवतयः श्वेतातपत्रोज्ज्वला
लक्ष्मीरित्यनुभूयते चिरमनुस्यूते शुभे कर्मणि ।
विच्छिन्ने नितरामनङ्गकलहक्रीडात्रुटत्तन्तुकं
मुक्ताजालमिव प्रयाति झटिति भ्रश्यद्दिशोदृश्यताम् ॥२३॥

XX. (*a*) °साया°; °माया°. D. N. °नो°; °नः. K. where lines one and two change places. (*c*) °पि°; °पि P. R. N. मते; विभे. K. P. R. N. व्य°; प्य°. N. °माः; मः D. (*d*) वा जलराशयः; चापि जलाशयाः K.

XXI. (*b*) वि omitted in K. (*d*) व्युत्पन्न; मन्न. K.

|| श्रीगणेशाय नमः ||

# । अथ वैराग्यशतकम् ।



दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये ।
स्वानुभूत्येकमानाय नमः शान्ताय तेजसे || १ ||

## अथ तृष्णादूषणम् ।

बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः ।
अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् || २ ||

न संसारोत्पन्नं चरितमनुपश्यामि कुशलं
विपाकः पुण्यानां जनयति भयं मे विमृशतः ।
महद्भिः पुण्यौघैश्चिरपरिगृहीताश्च विषया
महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम् || ३ ||

उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो
निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन संतोषिताः ।
मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः
प्राप्तः काणवराटकोपि न मया तृष्णेधुना मुञ्च माम् ||४||

I. (*a*) चिन्मात्र; विज्ञान. M. (*b*) °त्ये°; °त्यै° B. M. °माना°; नाथा°. P.

II. (*b*) °बोधो°; °ज्ञानो° M. P. R. °श्चा°; म°. M.

III. (*c*) परिगृहीताश्च; °मपि गृहीताश्च. K. G. Bo. (orig. Bo.n.) परिगृही-ता हि. B.

IV. (*b*) °तोषि°; °शोवि°. A. °सेवि°. M. (*c*) निशाः; क्षपाः A. M. (*d*) °धुना मुञ्च माम्; सकामा भव. G. P. J. R. N. Bo.n.

भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किंचित्फलं
त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला ।
भुक्तं मानविवर्जितं परगृहेष्वाशङ्कया काकव-
त्तृष्णे जृम्भसि पापकर्मनिरते नाद्यापि संतुष्यसि ॥ ५ ॥

खलोल्लापाः सोढाः कथमपि तदाराधनपरै-
र्निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा ।
कृतश्चित्तस्तम्भः प्रतिहतधियामञ्जलिरपि
त्वमाशे मोघाशे किमपरमतो नर्तयसि माम् ॥ ६ ॥

आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं
व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते ।
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते
पीत्वामोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ ७ ॥

दीना दीनमुखैः सदैव शिशुकैराकृष्टजीर्णाम्बरा
क्रोशद्भिः क्षुधितैर्नरैर्न विधुरा दृश्येत चेद्गेहिनी ।

---

V. (a) °न्नम ; °न्त्वा. P. K. R. °न्त्या. M. °त्फलम् ; °ह्नम्. M. (b) जाति ; शील. B. P. R. °तम्; °ता. M. (c) °त्वा°; °मा° C. J. B. A. Bo.n. N. and G. (in margin ; orig. in text) श्वा. B. K. स्वा°. R. Commentary. (d) जृम्भसि ; दुर्मति. Bo.n. G. C. जृम्भिणि. M. वैरिणि P. R. J. (where original in margin) निरते; पिशुने. K. N. °मि; °नि. P.

VI. (a) °लोल्ला° ; °लाला° A. N. °लोला° B. तदा; नृपा° B. (c) °तश्चि° ; श्चो चि° B. M. °तो वि° A. J. P. R. N. Bo.n. °भः प°; °भप P. R. °तिह° ; °हसि°. C. K. (d) °मप° ; °मुप°. Bo. (orig. Bo.n.) K. T.

VII. (a) °तिनम्; °वनम् Bo. (orig. Bo.u.) K. (b) न वि° ; °पि न. N. (c) °पत्ति°; °योग°. M. °श्च ; °स्तु M.

VIII. (a) °ना; °नाम्. T. M. सदैव; तथैव; T. स्वकीय. K. B. G. Bo. (orig. Bo.n.) °रा ; °रैः A. °राम् T. Bo. K. (b) °नैरैर्न ; °निरन्न B. °निरन्न T. K. Bo. J. N. °र्नरैर्न G. विधुरा; विधुराम्. T. जठराम्. K. बठरैः. J. दृश्येत; °र्दृश्येत. J. दृश्या न. N. दृष्टैव. Bo.n. (नाम् for चेत्). नी; °नीम्. T. K. Bo.

याञ्चाभङ्गभयेन गद्गदगलत्त्रुटद्व्यिलीनाक्षरं
  को देहीति वदेत्स्वदग्धजठरस्यार्थे मनस्वी जनः ॥ ८ ॥

निवृत्ता भोगेच्छा पुरुषबहुमानो विगलितः
  समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः ।
शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने
  अहो धृष्टः कायस्तदपि मरणापायचकितः ॥ ९ ॥

हिंसाशून्यमयत्नलभ्यमशनं धात्रा मरुत्कल्पितं
  व्यालानां पशवस्तृणाङ्कुरभुजः सृष्टाः स्थलीशायिनः ।
संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां
  यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥ १० ॥

न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये
  स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः ।
नारीपीनपयोधरोरुयुगुलं स्वप्नेऽपि नालिङ्गितं
  मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥ ११ ॥

भोगा न भुक्ता वयमेव भुक्ता-
  स्तपो न तप्तं वयमेव तप्ताः ।
कालो न यातो वयमेवयाता-
  स्तृष्णा न जीर्णा वयमेव जीर्णाः ॥ १२ ॥

---

(*c*) °लत्त्रुटद्व्याह्वि°; °लोत्रच्छद्वि°. K. °लस्तद्वाह्वि°. Bo. °लत्त्रुदाह्वि° Bo.n. (*d*) °स्या°; °स्वा°. T. जनः; पुमान्. A. B. K. Bo. G. M. P. R. N.

IX. (*a*) पुरुषबहु; बहुपुरुष. T. °नो वि°; °नौर्व°. J. °नोपि. K. N. °तः; °तो. T. (*b*) °समाः; °तमाः; A. (*c*) °यैष्ट्यु°; यैष्टु° C. यत्यु° A. °यैस्यो°. M. °रायु°. J. (*d*) धृष्टः; दुष्टः. T. J. K. Bo. भ्रष्टः K. (Stanza 92). दृष्टः. P. मूढः. N. °णा°; °णो°. K. °पाय; °याप. A. G. °पात. Bo.n.

X. (*a*) धात्रा मरुत्कल्पितम्; वायुः कृतो वेधसा. K. Bo. (orig. Bo.n.) °तम्; °तो. A. B. (*b*) पशव°; पवन°. Bo.n. °सृ°; °सु°. K. Bo. (orig. Bo.n.) °स्तु°. N. (*c*) न°; °नै. B. (*d*) या°; ता°. N: सततम्; सहसा. K. Bo. (orig. Bo,n.).

XI. (*c*) नारी; रामा. P. R. °गु°; °ग°. K. N. Bo. B.

क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न संतोषतः
सोढा दुःसहशीतवाततपनाः क्लेशाश्च तप्तं तपः ।
ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शम्भोः पदं
तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चिताः ॥ १३ ॥

वलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः ।
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ १४ ॥

येनैवाम्बरखण्डेन संवीतो निशि चन्द्रमाः ।
तेनैव च दिवा भानुरहो दौर्गत्यमेतयोः ॥ १५ ॥

अवश्यं यातारश्चिरतरमुषित्वापि विषया
वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ।
व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः
स्वयं त्यक्त्वा ह्येते शमसुखमनन्तं विदधति ॥ १६ ॥

## तृष्णाधिकारमाह ।

विवेकव्याकोशे विकसति शमे शाम्यति तृषा
परिष्वङ्गे तुङ्गे प्रसरतितरां सा परिणतिः ।
जराजीर्णैश्वर्यग्रसनगहनाक्षेपकृपण-
स्तृषापात्रं यस्यां भवति मरुतामप्यधिपतिः ॥ १७ ॥

---

XIII. (*b*) °ढा; °ढो. B. शीतवात; वातशीत. B. °नाः; न. A. B. P. N. Bo.n. नः· R. °शाश्च; °शो न B. °शा न. A. P. R. N. Bo.n. (*d*) य°; त°. C. M. °ताः; °तम्. B. °नः. C. A.

XIV. (*a*) °लि°; °ली°. P. °तैर°; तैना° N.

XV. (*a*) °नैवा°; °न चा° Bo.n. (*b*) च; य° R. °नुरहो; नुः पश्य. R.

XVI. (*a*) °पि; च A. (*d*) °ह्ये°; °श्चे° A. स्वे° K. Bo. (orig. Bo.n.) °श्चे° G. °ति; °ते. P. R.

XVII. (*a*) °कस°; °दश° C. M. शमे; शनैः B. (*b*) परिष्वङ्गे तुङ्गे; भृशं याता तस्याम्. B. (*c*) गहना°; महता° B. कृ°; क्ष° M. °णस्तृषा°; णः कृपा B. M.

## मदनविडम्बनमाह ।

कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो
व्रणी पूतिक्लिन्नः कृमिकुलशतैरावृततनुः ।
क्षुधाक्षामो जीर्णः पिठरजकपालार्पितगलः
शुनीमन्वेति श्वा हतमपि च हन्त्येव मदनः ॥ १८ ॥

## विषयाणामधिकारमाह ।

भिक्षाशनं तदपि नीरसमेकवारं
शय्या च भूः परिजनो निजदेहमात्रम् ।
वस्त्रं च जीर्णशतखण्डमयी च कन्था
हाहा तथापि विषया न परित्यजन्ति ॥ १९ ॥

## रूपतिरस्कारमाह ।

स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ
मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितम् ।
स्रवन्मूत्रक्लिन्नं करिवरकरस्पर्धि जघन-
महो निन्द्यं रूपं कविजनविशेषैर्गुरु कृतम् ॥ २० ॥

---

XVIII. (*a*) रहि°; गलि° A. (*b*) °ति; °य. A. B. K. P. R. (*c*) पिठरज-कपालार्पित; पिठरककणालेपित A. पिठरककपालार्दित B. पिवरनृकपालार्दित K. पिठ-रककपालार्पित R. पिठरकपालार्पित. P. (*d*) च; हि A. °व; °ष. B. P. R.

XIX. (*c*) च; न. A. सु° T. वि°. R. N. P. B. जीर्णशतखण्डमयी च; जीर्ण-शतखण्डमलीन C. K. S. W. L. X. शीर्ण for जीर्ण B. शीर्णपट for जीर्णशत R. P. (*d*) न; न. T. परित्यजन्ति; बहाति चेतः T.

XX. (*c*) कर; शिरः T. N. कट M. (*d*) °नमहो नि°; °नं मुहुर्नि° B. T. K. Bo. N. R. G. P. जन; वर. K. Bo. (orig. Bo.n.) M.

अजानन्माहात्म्यं पततु शलभो दीपदहने
स मीनोप्यज्ञानाद्बडिशयुतमश्नातु पिशितम् ।
विजानन्तोप्येते वयमिह विपज्जालजटिला-
न्न मुञ्चामः कामानहह गहनो मोहमहिमा ॥ २१ ॥

## अथ दुर्जनमुद्दिश्याह ।

विसमलमशनाय स्वादु पानाय तोयं
शयनमवनिपृष्ठे वल्कले वाससी च ।
नवधनमधुपानभ्रान्तसर्वेन्द्रियाणा-
मविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ॥ २२ ॥

## मानितामुद्दिश्याह ।

विपुलहृदयैर्धन्यैः कैश्चिज्जगज्जनितं पुरा
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा ।
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥ २३ ॥

---

XXI. (*a*) °न्माहात्म्यम्; °न्नप्येषः A. °न्दाहात्म्यम् P. R. N. पततु; पतति. B. K. Bo. विशति. T. °भो दीप; °भस्तीव्र. A. B. T. K. N. R. P. G. Bo. M. (*b*) °ज्ञानाद्ब°; ज्ञानाद्वि° R. P. B. °ज्ञात्वाव. T. °श्नातु; °श्नन्ति. Bo. °श्नाति. T. K. G. Bo.n. (*c*) °प्ये°; °मे°. K. Bo. (orig. Bo.n.) G. जटि°; पट°. K. Bo. (orig. Bo.n.) G.

XXII. (*a*) बिस; फल. A. B. T. K. Bo. R. P. (*b*) °ष्ठे; °ष्ठम्. P. R. शयनमवनिपृष्ठे; क्षितिरपि शयनार्थम्. N. वल्कले वाससी; वाससी वल्कले. A. T. K. Bo. वाससी वल्कलम्. N. च; तु. P. नु. R. (*c*) नवधन; न धवल. A. धनलव. B. T. K. Bo. °नभ्रान्त °नं भ्रान्त. A. M. °नभ्रामि. K. (*d*) °मनुमन्तुम्; °मनुवर्तुम्. T. °मुपगन्तुम्. A.

XXIII. (*a*) हृदयैः. मतिभिः; Bo.n. °धन्यैः; °रीशैः. T. K. Bo. G. N. कैश्चि°; एत°. N. ध°...श्चि°; कैरप्येत°. Bo.n. (*b*) °णं यथा; °णमन्यथा. B. °णं पुरा. G. (*c*) धी°; वी°. A. (*d*) °र; रः. M. A. G. Bo. (orig. Bo.n.) ह. C. °ष. °व G.

## निस्पृहाणामधिकारमाह ।

त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः
  ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः ।
इत्थं मानद नातिदूरमुभयोरप्यावयोरन्तरं
  यद्यस्मासु पराङ्मुखोसि वयमप्येकान्ततो निस्पृहाः ॥ २४ ॥

अभुक्तायां यस्यां क्षणमपि न यातं नृपशतै-
  र्भुवस्तस्या लाभे क इव बहुमानः क्षितिभुजाम् ।
तदंशस्याप्यंशे तदवयवलेशेपि पतयो
  विषादे कर्तव्ये विदधति जडाः प्रत्युत मुदम् ॥ २५ ॥

मृत्पिण्डो जलरेखया वलयितः सर्वोप्ययं नन्वणु-
  रङ्गीकृत्य स एव संयुगशतै राज्ञां गणैर्भुज्यते ।
तद्दद्युर्ददतेथवा न किमपि क्षुद्रा दरिद्रा भृशं
  धिग्धिक्तान्पुरुषाधमान्धनकणं वाञ्छन्ति तेभ्योपि ये ॥२६॥

---

XXIV. (*a*) प्र°; प्रा.° A. (*b*) नः; च. G. (*c*) °द; °ष°. A. B. T. K. N. M. G. Bo. (orig. Bo.n.) °मुभयो°; °मनयो°. B. गतयो° G.

XXV. (*a*) न; च. Bo.n. या°; जा° G. नी° A. (*b*) ला°; लो° Bo.n. इव; इह. T. K. Bo. (orig. Bo.n.) G. °भुजाम्. °भृताम्. R. Bo. (orig. Bo.n.) G. N. (*c*) तदंशस्या°, तदप्यस्या°. A. (*d*) °डाः; °डः. A. °नाः B.

XXVI. (*a*) मृत्पिण्डो; नित्यं यो. B. वलयि°; परिवृ°. P. R. Bo.n. चपरि°. A. °न्व°; न्व. C. A. (*b*) °रङ्गी°; °स्त्वंशी°. M. R. Bo.n. स्वांशी°. N. स्वाशी° Bo. °स्तङ्गी. P. °स्तं स्वी°. T. स्तब्धी° B. °र्यैस्वी°. A. °स्वयी. K. स एव; सदैव. T. तमेव. A. K. N. °युग; °गर. N. गणैर्भुज्यते; शतैर्भुज्यते. P. R. गणा भुञ्जते. A. N. T. K. Bo. (*c*) तद्दद्युः; नो दद्युः. A. T. Bo.n. ते दद्युः. N. P. R. B. M. ददन्ते. K. Bo. ददतेथवा न किमपि; ददतोथ तान्किमपि ते A. ददतेथवा किमपि ते. T. Bo.n. K. & N. (where °परे for °पिते) Bo. (where & in K. ददतो for ददते.) दरिद्रा भृशम्; भृशं याचकाः A. (*d*) धिग्धि°; ये धि°. T. तान्पु°; कापु°. K. Bo. (orig. Bo.n.) कणम्; कणान्. A. Bo.n. लवम्. B. K. Bo. N. लवान्. T. वाञ्छन्ति तेभ्योपि ये; तेभ्योपि वाञ्छन्ति ये. K. Bo. इच्छन्ति तेभ्योपि ये Bo.n.

## दुर्भगसेवकस्य वाक्यमाह ।

न नटा न विटा न गायना
न परद्रोहनिबद्धबुद्धयः ।
नृपसद्मनि नाम के वयं
कुचभारानमिता न योषितः ॥ २७ ॥

पुरा विद्वत्तासीदुपशमवतां क्लेशहतये
गता कालेनासौ विषयसुखसिद्ध्यै विषयिणाम् ।
इदानीं तु प्रेक्ष्य क्षितितलभुजः शास्त्रविमुखा-
नहो कष्टं सापि प्रतिदिनमधोधः प्रविशति ॥ २८ ॥

## साहंकारं पुरुषमुद्दिश्याह ।

स जातः कोऽप्यासीन्मदनरिपुणा मूर्ध्नि धवलं
कपालं यस्योच्चैर्विनिहितमलंकारविधये ।
नृभिः प्राणत्राणप्रवणमतिभिः कैश्चिदधुना
नमद्भिः कः पुंसामयमतुलदर्पज्वरभरः ॥ २९ ॥

---

XXVII. (*a*) वि°; भ°. A. (वि in margin) न गा°; विगा°. R. ना; का in all copies except C. R. P. (*b*) परद्रोहानिबद्धबुद्धयः; परद्रोहविपण्णमानसाः. A. परद्रोहकृतैकबुद्धयः. R. P. च मधेनरवादिचञ्चवः T. Bo. [orig. Bo.n. (विरुद्ध for निबद्ध.)] G. N. (where नु for न) च नर्मेनरवादनञ्चराः. K. (*c*) नृपमीक्षितुमत्र के वयम्. A. (margin) T. G. N. सद्मनि; संसदि. K. Bo. सद्मसु- P. R. नाम; तेत्र. Bo. (orig. Bo.n.) °यम्; °लम् C. (*d*) कुच; स्तन. A. T. K. N. P. R. °रान°; °रान्न°. A. The last two lines transposed in P. & R.

XXVIII. (*a*) °दुपशमवताम्; °दुपशमदृशाम्. (दृशाम्?.) B. °दमलिनधि-याम्. K. Bo. (*b*) °द्ध्यै; °द्धौ. K. Bo. °द्धै M. (*c*) तु; मम. K. Bo. सा M. तल; लव. Bo.

XXIX. (*a*) स; सु°. Bo.n. (*b*) °स्योच्चैर्वि°; स्यास्ति वि°. Bo.n. °ध°; °प C. (*c*) प्रवण; प्रबल. B.

अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदर्थं
शूरस्त्वं वादिदर्पज्वरशमनविधावक्षयं पाटवं नः ।
सेवन्ते त्वां धनाढ्या मतिमलहतये मामपि श्रोतुकामा
मय्यप्यास्था न चेत्तत्त्वयि मम सुतरामेष राजन्गतोस्मि ॥ ३० ॥

यदा किंचिज्ज्ञोहं द्विप इव मदान्धः समभवं
तदा सर्वज्ञोस्मीत्यभवदवलिप्तं मम मनः ।
यदा किंचित्किंचिद्बुधजनसकाशादवगतं
तदा मूर्खोस्मीति ज्वर इव मदो मे व्यपगतः ॥ ३१ ॥

## निर्ममतास्वरूपमाह ।

अतिक्रान्तः कालो लटभललनाभोगसुभगो
भ्रमन्तः श्रान्ताः स्मः सुचिरमिह संसारसरणौ ।
इदानीं स्वःसिन्धोस्तटभुवि समाक्रन्दनगिरः
सुतारैः फूत्कारैः शिव शिव शिवेति प्रतनुमः ॥ ३२ ॥

माने म्लायिनि खण्डिते च वसुनि व्यर्थे प्रयातेर्थिनि
क्षीणे बन्धुजने गते परिजने नष्टे शनैर्यौवने ।

---

XXX. (a) °शिषे त्वम; °श्वरस्त्वम्. A. °इमहे°; °श्वरा. A. °दर्थम् ; °दित्थम्. A. P. R. M. B. G. & Bo.n. (b) °दि; °म. M. P. R. ज्वर; व्युप°. N. नः; मे. K. ने. G. (?) (c) धनाढ्या; मदान्धा. P. R. धनान्धा. A. B. M. Bo.n. मतिमलहतये; ह्यानिविमलधियो. A. (d) मय्याप्यास्था न चेत्तत्; मामप्यास्थानमेतन्. M. मय्यास्थानैवरेते B. चेत्तत्त्वयि; चेत्त्वय्यपि. T. ते चेत्त्वयि K. N. G. चेत्ते त्वयि. A. सु; नि. T. K. Bo. (orig. Bo.n.) G. N. °ष; °व. T. K. Bo. (orig. Bo.n.) G. N. न्गतोस्मि°; न्गतासीत्. K. Bo. (orig. Bo.n.) G. °न्गतोसि. M. °ज्जनास्था. N.

XXXI. See Nîtiśataka St. 8.

XXXII. (a) °टभ; °लित. B. T. °भगो; °खदो. T. °लभो M. (b) श्रान्ताः स्मः; सुभ्रान्ताः B. °णौ; °णिम्; B. T. °णीम्. M. (d) सु°; स°. C. तनुमः; °लपतः. B.

XXXIII. (a) म्लायिनि; म्लायति. A. क्षायिनि. K. Bo. (orig. Bo.n.) मायिनि. N. °सुनि; °यासि. A. °र्थे. K. Bo. N.

युक्तं केवलमेतदेव सुधियां यज्जह्नुकन्यापयः-

पूतग्रावगिरीन्द्रकन्दरदरीकुञ्जे निवासः क्वचित् ॥ ३३ ॥

परेषां चेतांसि प्रतिदिवसमाराध्य बहु हा

प्रसादं किं नेतुं विशसि हृदय क्लेशकलितम् ।

प्रसन्ने त्वय्यन्तः स्वयमुदितचिन्तामणिगुणे

विमुक्तः संकल्पः किमभिलषितं पुष्यति न ते ॥ ३४ ॥

## अथ भोगपद्धतिः ।

भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं

मौने दैन्यभयं बले रिपुभयं रूपे जराया भयम् ॥

शास्त्रे वादभयं गुणे खलभयं काये कृतान्ताद्भयं

सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ॥३५॥

अमीषां प्राणानां तुलितबिसिनीपत्त्रपयसां

कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम् ।

यदाढ्यानामग्रे द्रविणमदनिःसंज्ञमनसां

कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ ३६ ॥

---

(*d*) दरी; नटी. N. नि°; °पु. Bo.n.

XXXIV. (*a*) °वसमाराध्य; °नि क्षमायम्य. (?) B. हा; °भा. A. T. K. Bo. G. P. R. N. °भा हा. M. (*b*) °दम; °दे T. विश°; वह° B. °य; °ये. C. omitted in G. °यम. B. कन्तिनम्; कांल्लम. A. R. P. Bo.n. विफलम. T. °मफलम्. K. विकल्पम् G. (*c*) °व्यन्तः; °व्येव. A. Bo.n. गुणे; मणौ. A. गणा. N. Bo.n. (*d*) °मु°; °वि° A. T. K. Bo. G. N. वे. Bo.n. °ल्पः; °ल्पे. K. °ल्पम्. G. पु°; नु° A. ते; सः A.

XXXV. (*b*) मौ°; मा. K. Bo. T. N. G. जराया; तरुण्या. T. K. Bo. G. (*c*) °द; °दि. K. Bo. G. N.

XXXVI. (*c*) °दाढ्या°; °दन्भा°. M. °ढ्ना° G. °दाभा. Bo.n. °संज्ञ; °शङ्क. C. (*d*) वीत; म्लान. T. Bo. G. N. मान. A. पान°; °स्थान°. °B. °स्थान° Bo.n.

भ्रातः कष्टमहो महान्स नृपतिः सामन्तचक्रं च त-
त्पार्श्वे तस्य च सापि राजपरिषत्ताश्चन्द्रबिम्बाननाः ।
उद्रिक्तः स च राजपुत्रनिवहस्ते बन्दिनस्ताः कथाः
सर्वं यस्य वशादगात्स्मृतिपदं कालाय तस्मै नमः ॥३७॥

पुनः कालमुद्दिश्याह ।

वयं येभ्यो जाताश्चिरपरिगता एव खलु ते
समं यैः संवृद्धाः स्मृतिविषयतां तेपि गमिताः ।
इदानीमेते स्मः प्रतिदिवसमासन्नपतना-
द्गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ ३८ ॥

यत्रानेकः क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र चान्ते न चैकः ।
इत्थं चेमौ रजनिदिवसौ दोलयन्द्वाविवाक्षौ
कालः काल्या सह बहुकलः क्रीडति प्राणिसारैः ॥ ३९ ॥

XXXVII. (*a*) भ्रातःकष्टमहो; सा रम्या नगरी. K. T. Bo. (orig. Bo.n.) G. N. (*b*) तस्य; यस्य. Bo.n. च सापि राजपरिषत्; च सा विदग्धवनिता. A. वशा विदग्धपरिषत् B. च सा विदग्धपरिषत् K. T. Bo. N. (*c*) उद्रिक्तः; उत्सिक्तः A. सद्वृत्तः. B. उन्मत्तः K. T. Bo. उद्वृत्तः N. Bo.n. उद्विक्तः M. (°द्रि°?) (*d*) °दगात्स्मृतिपदम्; °दगात्स्मृतिपथम्. K. T. N. G. °त्स्मृतेः पदमगात्. A.

XXXVIII. (*a*) परिगता; °मपि गता. A. °मपगता. P. R. मरणगा. B. परिचिता. N. (*b*) समं यैः सम°; समा येषाम्. K. Bo. (orig. Bo.n.) समं ये ते. G. स्मृतिविषयताम्; स्मरणपदवीम. B. (*c*) स्मः; स्म. C. G. B. T. Bo. स्मन्. K. A. °मास°; °माप°. T. K. Bo. G. (*d*) °द्ग°; ग°. A. T. K. P. R. G. (*d*) ° स्थाम्°; स्था. (:?) T. Bo. N. सिकतिल; °मिव किल. A. सिकतिनि. Bo. (orig. Bo.n.) सिकतसम. G.

XXXIX. (*b*) चान्ते न चैकः; नैकोपि चान्तः A. नैकोपि चान्ते. T. K. Bo. N. न कोपि चान्ते G. (*c*) चेमौ; नेयं. (?) N. दो°; लो°. (?) N. °न्द्वाविवाक्षौ°; न्त्राविवाक्षौ. A. °न विवाक्षौ°:. (?) G. °न्वापि वाक्षौ. C. (*d*) काल्या; कल्पैः. A. कल्यौ. N. सह बहुकलः; भुवनफलके. T. K. Bo. (orig. Bo.n.) G. N. सह बहुबलः. A. °णि; °ण. C. सा°; श्वा°. N.

तपस्यन्तः सन्तः किमधिनिवसामः सुरनदीं
गुणोदारान्दारानुत परिचरामः सविनयम् ।
पिबामः शास्त्रौघानुत विविधकाव्यामृतरसा-
न्न विद्मः किं कुर्मः कतिपयनिमेषायुषि जने ॥ ४० ॥

गङ्गातीरे हिमगिरिशिलाबद्धपद्मासनस्य
ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य ।
किं तैर्भाव्यं मम सुदिवसैर्यत्र ते निर्विशङ्काः
संप्राप्स्यन्ते जरठहरिणाः शृङ्गकण्डुविनोदम् ॥ ४१ ॥

स्फुरत्स्फारज्योत्स्नाधवलिततले क्वापि पुलिने
सुखासीनाः शान्तध्वनिषु रजनीषु द्युसरितः ।
भवाभोगोद्विग्नाः शिव शिव शिवेत्यार्तवचसा
कदा स्यामानन्दोद्गतबहुलबाष्पाप्लुतदृशः ॥ ४२ ॥

महादेवो देवः सरिदपि च सैवामरसरि-
द्गुहा एवागारं वसनमपि ता एव हरितः ।
सुहृद्वा कालोयं व्रतमिदमदैन्यव्रतमिति
कियद्वा वक्ष्यामो वटविटप एवास्तु दयिता ॥ ४३ ॥

---

XL. (*b*) °णोदारान्; °णोदर्कान् C. सविनयम्; सुविनयम B. स्वविषयान्. T. K. G. सविनयान्. Bo. (orig. Bo.n.) (*c*) °स्त्रौघा°; स्त्रार्थो.° Bo.n. °नुत; न्हुन. C. M.

XLI. (*a*) °नस्य; °नस्थम्. A. (*b*) ध्या°. ज्ञा°. A. B. (*c*) °र्यत्र; °र्येषु. T. °ङ्काः; °ङ्कम्. A. °ङ्कः. M. (*d*) कण्डूयन्ते न खलु हरिणाः शृङ्गमङ्के मदीये. B. (ही is eaten up). कण्डूयन्ते जरठहरिणाः शृङ्गमङ्के मदीये. T. P. R. कण्डूयन्ते जरठहरिणाः स्वाङ्गमङ्के मदीये. N. °प्स्य°; °प्य°. A. M. °दम्; °दाः. M.

XLII. (*b*) सुखा°; समा°. B. (*c*) °त्यार्तवचसा; °त्यस्तवचसा. A. °त्युच्चवचसा. T. K. G. °त्युद्विवचसः. Bo. °त्यार्तवचसः. R. Bo.n. °त्यात्तवचसः. P. °त्युच्चवचनः. N. (*d*) स्यामानन्दोद्गतबहुल; यास्यामान्तर्गतबहल. T. यास्यामोन्तर्गतबहुल. K. Bo. (orig. Bo.n.) G. N. स्यामामोदोद्गतबहल. A. orig. except ह for हु. B. °प्लुतदृशः; °व्याकुलदृशः. A. T. व्याकुलदृशाम्. N. °प्लुतदृशाम्. B.

XLIII. (*a*) सैवामर, सैवासुर. C. सेव्यामर. B. (*b*) ए° वै°. B. ह°; स° M. (*c*) °मिति. °मिदम् all copies except B.

शिरः शार्वंस्वर्गात्पशुपतिशिरस्तः क्षितिधरं
महीध्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम् ।
अधो गङ्गा सेयं पदमुपगता स्तोकमथवा
विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ ४४ ॥

आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागमाहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ।
मोहावर्तसुदुस्तरातिगहना प्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥४५॥

आसंसारं त्रिभुवनमिदं चिन्वतां तात तादृ-
ङ्नैवास्माकं नयनपदवीं श्रोत्रवर्त्मागतो वा ।
योयं धत्ते विषयकरिणीगाढगूढाभिमान-
क्षीबस्यान्तःकरणकरिणः संयमालानलीलाम् ॥ ४६ ॥

## सांप्रतं निर्वेदतायाः स्वरूपमाह ।

ये वर्धन्ते धनपतिपुरःप्रार्थनादुःखभाजो
ये चाल्पत्वं दधति विषयाक्षेपपर्यस्तबुद्धेः ।

---

XLIV. See Nītiśataka St. 10.

XLV. (*b*) धैर्य; धर्म. K. G. T. (*c*) प्रो°; उ°. T. तटी; टवी. P. (*d*) °सो; °सा. T. P. °साम्. Bo.n. °न्ति; °न्तु. M. °गीश्वराः°; गेश्वरः Bo.n.

XLVI. (*a*) °रम्; रात्. N. चिन्वतां तात तादृक्; विभृतान्नास्ततो दिक्. A. तात; नाम. B. वाच G. (*b*) वर्त्मा°; मार्गम्. T. K. Bo. (मार्गे Bo.n.) G. N. (*c*) °णी; °णीम्. B. गू°; रू°. A. T. P. R. °नक्षीव° °नं जीव°. B. °नः क्षीव. T. K. G. M. C. नं क्षीव Bo.n. (*d*) °नम् क्षान्तः शान्तः करणकरिणीसं-यमालानलीलाम् A. °स्यान्तः स्वान्त° Bo.n. °ण; °णम्. Bo.n. °लान; जाल. B. °लाम्; °नम्. Bo.n. °ला. T.

XLVII. (*a*) °र्द्धः°; °र्ते°. A. P. R. N. Bo.n. °भाजो; दीर्घाः M. P. R. (*b*) °ल्प°; °न्य°. M. °र्यस्त; °र्याप्त N.

तेषामन्तःस्फुरितहसितं वासराणां स्मरेयं
ध्यानच्छेदे शिखरिकुहरग्रावशय्यानिषण्णः ॥ ४७ ॥

विद्या नाधिगता कलङ्करहिता वित्तं च नोपार्जितं
शुश्रूषापि समाहितेन मनसा पित्रोर्न संपादिता ।
आलोलायतलोचना युवतयः स्वप्नेपि नालिङ्गिताः
कालोयं परपिण्डलोलुपतया काकैरिव प्रेरितः ॥ ४८ ॥

वितीर्णे सर्वस्वे तरुणकरुणापूर्णहृदयाः
स्मरन्तः संसारे विगुणपरिणामा विधिगतीः ।
वयं पुण्यारण्ये परिणतशरच्चन्द्रकिरणै-
स्त्रियामां नेष्यामो हरचरणचित्तैकशरणाः ॥ ४९ ॥

वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या
सम इह परितोषो निर्विशेषो विशेषः ।
स तु भवतु दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोर्थवान्को दरिद्रः ॥ ५० ॥

---

(*c*) °नं वा°; °नैर्वा.° B. णाम्; °णि°. N. (*d*) °दे°; °दैः. B. °ग्र°; °ग°. M.

XLVIII. (*c*) °ना युवतयः; °नाः प्रियतमाः N. (*d*) व° प्रेरितः; °व प्रेर्यते N. °व प्रेषितः P. R. B. T. K. °वान्नीयते. T. (2nd reading) वापीपितः Bo. (orig. Bo.n.) G. (where त for तः).

XLIX. (*a*) °ती°; °र्णी° C. M. A. G. (*b*) स्म°; न°. T. K. Bo. (orig. Bo.n.) °रं; °रम्. A. T. Bo. (°र Bo.n. ) °गुण; °रम K. T. Bo. (orig. Bo.n.) G. °मा त्रि°; °मां वि°. N. °माव°. C. M. T. G. A. B. K. Bo. °तीः; °ताः A. B. M. °तम्. T. K. Bo. °तिम्. G. N. (*c*) वयम्; कदा. T. K. Bo. G. °ण्या°; °ण्ये°. P. R. °णत°; °गत°. T. K. Bo. (orig. Bo.n.) G. °र्णात°. C. M. °णैस्त्रि°; °णां त्रि°. B. °णे त्रि°. P. R. Bo.n. °णास्त्रि°. T. K. Bo. G. N. °णैः प्रि°. M. (*d*) °माम्; °मा Bo. (orig. Bo.n.) P. R. M.

L. (*a*) च लक्ष्म्या; दुकूलैः. T. K. Bo. (orig. Bo.n. G. N. (*b*) इ°; °मि°. A. °षो वि°; °षाव° C. °षाचि°. Bo.n. (orig. Bo.) (*c*) °वतु; °वति. C. A. P. R. G. T. °द्रो; °द्री. A. T. G. (*d*) °द्रः;. °द्री. A. T.

यदेतत्स्वाच्छन्द्यं विहरणमकार्पण्यमशनं
सहार्यैः संवासः श्रुतमुपशमैकव्रतफलम् ।
मनो मन्दस्पन्दं बहिरपि चिरस्यापि विमृश-
न्न जाने कस्यैषा परिणतिरुदारस्य तपसः ॥ ५१ ॥

पाणिः पात्रं पवित्रं भ्रमणपरिगतं भैक्षमक्षय्यमन्नं
विस्तीर्णं वस्त्रमाशासुदशकममलं तल्पमस्वल्पमुर्वी ।
येषां निःसङ्गताङ्गीकरणपरिणतिः स्वात्मसंतोषिणस्ते
धन्याः संन्यस्तदैन्यव्यतिकरनिकराः कर्म निर्मूलयन्ति॥५२॥

दुराराध्यः स्वामी तुरगचलचित्ताः क्षितिभुजो
वयं तु स्थूलेच्छो महति च पदे बद्धमनसः ।
जरा देहं मृत्युर्हरति सकलं जीवितमिदं
सखे नान्यच्छ्रेयो जगति विदुषोन्यत्र तपसः ॥ ५३ ॥

भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चला
आयुर्वायुविघट्टिताभ्रपटलीलीनाम्बुवद्भङ्गुरम् ।

---

LI. (*a*) °त्स्वाच्छन्द्यम्; °त्स्वच्छन्दम्. A. B. N. (*b*) °र्यैः; °र्यैः B. C. Bo. (orig. Bo.n. (*c*) °न्दस्प°; °न्दं म° A. °न्दस्य° (?) Bo.n. चिरस्यापि विमृ·शन्, विमृश्यन्नविरतम्. A.

LII. (*b*) °माशासुदशकममलम्, °माशोदकमपि विमलम्. A. माशादशकमपमलम्, B. M. P. R. °माशादशकमचपलम्. N. °मस्वल्प°, °मल्पस्व° B. (*c*) °ङ्गी°; °न्तः° A. °तिः स्वात्म°; °तस्वान्त°. N. °तिस्वान्त°. P. R.

LIII. (*a*) °ध्यः स्वा°; °ध्याश्वा° B. N. तु°; दु° (?) A. °भुजो, °भृतो T. (*b*) तु; च. K. Bo. (orig. Bo.n.) G. N. महति च. सुमहति A. B. T. K. Bo. G. R. N. °बद्ध°, दत्त°. Bo.n. (*c*) °हम्, °हे K. सकलम् , यदि तम् A. दयितम् T. K. Bo. (orig. Bo.n.) P. R. N. (*d*) °षोन्य°; °षाम° K. Bo. (orig. Bo.n.) G. षो य° A.

LIV. (*b*) °भ्र°; °भ्न° N. लीना°; छिन्ना° K. Bo. (Bo.n. with ला for ली preceding ) ° °लम्ब° B.

लोला यौवनलालना तनुभृतामित्याकलय्य द्रुतं

योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विधद्ध्वं बुधाः ॥ ५४ ॥

पुण्ये ग्रामे वने वा महति सितपटच्छन्नपालीं कपाली-

मादाय न्यायगर्भद्विजहुतहुतभुग्धूमधूम्रोपकण्ठम् ।

द्वारं द्वारं प्रवृत्तो वरमुदरदरीपूरणाय क्षुधार्तो

मानी प्राणी स धन्यो न पुनरनुदिनं तुल्यकुल्येषु दीनः ॥ ५५ ॥

चाण्डालः किमयं द्विजातिरथवा शूद्रोथ किं तापसः

किंवा तत्त्वनिवेशपेशलमतिर्योगीश्वरः कोपि किम् ।

इत्युत्पन्नविकल्पजल्पमुखरैः संभाष्यमाणा जनै-

र्न क्रुद्धाः पथि नैव तुष्टमनसो यान्ति स्वयं योगिनः ॥५६ ॥

अहो धन्याः केचित्त्रुटितभवबन्धव्यतिकरा

वनान्तेचिन्वन्तो विषमविषयाशीविषगतिम् ॥

---

(c) °ना त°; °मास्त° A. K. Bo. N. °मा त° M. °मा द° Bo.n. °त न-नुभृतामि°; जलरयाञ्च° B. °य्य द्रुतम°; °याद्रुतम° Bo n. (d) योगे धैर्य°; योगिधैर्य° A. Bo.n. (गी for गि) °भे: भाम् A. °द्धिं विध°; °द्धिं दद° B. °द्धिं विद° all except N. B.

LV. (a) °ण्ये; °ण्य°. A. K. Bo. N. (orig. Bo.n.) सि°; श° A. शि° K. °च्छन्न°; °च्छेद° K. °छिन्न° A. °च्छत्र°; G. °ली क; °ली क A. Bo. G. लि क N. (b) °मा°; °लि धा° N. °मादाय न्यायगर्भे°; मामादाना नु वर्त्मे A. न्याय; ज्ञान. R. P. °भ°; °भम् K. G. M. हुत; मुख. C., omitted in M. °धू°; °भू°. C. °म°; °म्र° T. °ण्ठम्; °ण्ठे N. (c) °वृत्तो; °विष्टो. A. K. Bo. (orig. Bo.n.) G. N. व°; द° T. क्षुधार्तो; प्रवृत्तो A. (d) प्राणी; मानी A. धन्यो; नाथो A. T. K. N. G. न पु°; च पु° G. °म नु°; °ते नु°. M. °कु°; °क° A.

LVI. (a) चा°; च° T. P. R. Bo.n. किं ता°; वाना° A. (b) निवेश; विवेक. B. किम; वा. M. T. (c) °रैः सम°; °°ररा° A. N. °ष्य°; °ख्य° B. T. P. R. °णा. °णो. A. °ना. B. T. P. R. °नैर्न; °ना ना A. °नैर्ना Bo.n. (d) यान्ति स्वयम्; °यस्यान्ति ते. M.

LVII. (a) अहो. सखे; C. M. (b) चिन्वन्तो वि°....म्; चिनान्तर्वि°...शी-विषगताः C. M. शीविगालिनाः noted in M. Commentary.

शरच्चन्द्रज्योत्स्नाधवलगगनाभोगसुभगां

नयन्ते ये रात्रिं सुकृतचयचिन्तैकशरणाः ॥ ५७ ॥

एतस्माद्विरमेन्द्रियार्थगहनादायासकादाश्रय

श्रेयोमार्गमशेषदुःखशमनव्यापारदक्षं क्षणात् ।

शान्तं भावमुपैहि संत्यज निजां कल्लोललोलां गतिं

मा भूयो भज भङ्गुरां भवरतिं चेतः प्रसीदाधुना ॥ ५८ ॥

पुण्यैर्मूलफलैः प्रिये प्रणयिनि वृत्तिं कुरुष्वाधुना

भूशय्या नववल्कलैरकरुणैरुत्तिष्ठ यामो वनम् ।

क्षुद्राणामविवेकमूढमनसां यत्रेश्वराणां सदा

चित्तव्याध्यविवेकविह्वलगिरां नामापि न श्रूयते ॥ ५९ ॥

मोहं मार्जयतामुपार्जय रतिं चन्द्रार्धचूडामणौ

चेतः स्वर्गतरङ्गिणीतटभुवामासङ्गमङ्गीकुरु ।

---

(c) °गाम; °गा. B. (d) °न्तै, °न्ते°; C. M.

LVIII. (a) °स...श्रय; मकादाश्रयान् C. A. M. K. °सिकादाश्रय. B. N. (b) °णात्; °णम् Bo.n. (c) शान्तम्; स्वात्मी° A. T. N. Bo.n. आत्मी° K. Bo. स्वामी° G. ग°; म° K. A. (d) भूयो; °भूयास्. B. भव; नव T.

LIX. °ण्यै; °ण्ये A. B. Bo.n. T. प्रिये; प्रियै: A. P. Bo.n. B. K. R. प्रिय° G. तथा. N. प्रियः T. प्रणयिनि; न सलिलैः; K. °नि; °नीम् T. R. P. Bo. A. B. G. वृत्तिम्; प्रीतिम् G. M. (b) °य्या नव; य्यां नव T. K. Bo. G. °य्यां तृण.° B. N. °य्या तृण° P. R. Bo.n. °वल्कलैः; पत्रै° K. Bo. G. (orig. Bo.n.) °रकरुणै°; °रकृपणै° A. Bo. B. (where ष for प) °रकरणै° C. M. °रकररुणै; T. °वितनुनाम् K. यामा वनम्, या (?) मोहिन A. यामो वने T. (c) य°; त° Bo. (orig. Bo.n.) (d) चित्तव्याध्यविवेक° चित्तव्याधिविवेक° A. G. M. चित्तव्यानिविकार°; B. N. चित्तव्याध्यविवेक°; T चित्तव्याधिविकार°. K. Bo. P. R. °विह्वल°; °व्याकुल° T. G. °गिराम्; °श्रियाम् A. °गिरो Bo.

LX. (a) °पर्जे°; °पार्श्र° T. K. Bo. (orig. Bo.n.) °पश्र° G. (b) °वामा° °वि व्या° K. Bo. (orig. Bo.n.)

को वा वीचिषु बुद्बुदेषु च तडिल्लेखासु च स्त्रीषु च
ज्वालाग्रेषु च पन्नगेषु च सरिद्वेगेषु च प्रत्ययः ॥ ६० ॥

अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः
पृष्ठे लीलावलयरणितं चामरग्राहिणीनाम् ।
यद्यस्त्येवं कुरु भवरसास्वादने लम्पटत्वं
नोचेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥ ६१ ॥

विरमत बुधा योषित्सङ्गात्सुखात्क्षणभङ्गुरा-
त्कुरुत करुणामैत्रीप्रज्ञावधूजनसंगमम् ।
न खलु नरके हाराक्रान्तं घनस्तनमण्डलं
शरणमथवा श्रोणीबिम्बं रणन्मणिमेखलम् ॥ ६२ ॥

प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं
काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम् ।
तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा
सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ॥ ६३ ॥

मातर्लक्ष्मि भजस्व कंचिदपरं मत्काङ्क्षिणी मा स्म भू-
र्भोगेभ्यः स्पृहयालवो न हि वयं का निःस्पृहाणामसि ।

(c) को; नो. C. °लेखा°; °लोला° B. स्त्री°; श्री° A. T. K. N. (d) ज्वा°; आ°. K. सरिद्वेगे°; सुहृद्गो° (!) G. N. सरिद्वेगे° T. K. Bo. सरिद्वेगे° Bo.n.

LXI. (a) °रस°; °रल° A. °तो दा°; °योरो° T. K. Bo. (orig. Bo.n.) G. N. (b) पृष्ठे ली°; पश्चाल्ली° T. K. Bo. (orig. Bo.n.) N. °वलयरणितं चा° °वरापरिणतिश्चा° C. (c) °स्त्ये°; °स्ति° N. A. Bo.n. °सा°; स° A.

LXII. (a) °ङ्गान्; °ङ्ग° Bo.n. (c) खलु; कुरु. A. हा°; भा° Bo.n. क्रा°; क्षा° A. Bo n. °नम्र°; °नं स्त°. M.

LXIII. See Nîtiśataka, St. 26, where add (b) °कथा; °कथम. A. (c) विनयः; नियमः B. (d) विधिः; गतिः R. Commentary.

LXIV. (a) क°; कि°. A. (b) °भ्यः; °षु. A. N. °वो न हि वयं का; °वस्तव वशे किम्. A. N. Bo.n. P. R. (in which four का for किम्).

सद्यःस्यूतपलाशपत्रपुटिकापात्रे पवित्रीकृते
भिक्षासक्तुभिरेव संप्रति वयं वृत्तिं समीहामहे ॥ ६४ ॥

यूयं वयं वयं यूयमित्यासीन्मतिरावयोः ।
किं जातमधुना येन यूयं यूयं वयं वयम् ॥ ६५ ॥

बाले लीलामुकुलीतममी मन्थरा दृष्टिपाताः
किं क्षिप्यन्ते विरम विरम व्यर्थ एष श्रमस्ते ।
संप्रत्यन्ये वयमुपरतं बाल्यमास्था वनान्ते
क्षीणो मोहस्तृणमिव जगज्जालमालोकयामः ॥ ६६ ॥

इयं बाला मां प्रत्यनवरतमिन्दीवरदल-
प्रभाचोरं चक्षुः क्षिपति किमभिप्रेतमनया ।
गतो मोहोस्माकं स्मरकुसुमबाणव्यतिकर-
ज्वरज्वाला शान्ता तदपि न वराकी विरमति ॥ ६७ ॥

रम्यं हर्म्यतलं न किं वसतये श्राव्यं न गेयादिकं
किं वा प्राणसमासमागमसुखं नैवाधिकं प्रीतये ।
किं तूद्भ्रान्तपतत्पतङ्गपवनव्यालोलदीपाङ्कुर-
च्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः ॥६८॥

---

(*c*) सद्यः; यद्य°. A. स्यू°; पू° C. °श्रु° T. °टिका°; °टकं°. T. Bo.n. °त्रे; त्रै: A. °ते; °तैः N. सक्तु°; वस्तु° N.

LXV. (*b*) जा°; या° Bo.n. येन यूयम्; मित्र येन. C.

LXVI. (*b*) विरमव्य°; °त यतोव्य° C.

LXVII. (*b*) °चो°; °चौ° M. °या; °सा. M.

LXVIII. (*a*) श्रा°; श्र°. P. R. N. Bo.n. (*b*) °मास°; °मं स°. A. °कम्; °क°. M. N. (*c*) तूद्भ्रा°; तु भ्रा°. T. K. N. G. Bo. तूभ्रा°. M. तभ्रा°. A. °पतत्पतङ्ग°.; °पतङ्गपक्ष. T. K. G. N. (*d*) सकलम्; सवतम् Bo. (orig. Bo.n.) T. °ताः; °तम्. G.

किं कन्दाः कन्दरेभ्यः प्रलयमुपगता निर्झरा वा गिरिभ्यः
प्रध्वस्ता वा तरुभ्यः सरसफलभृतो वल्कलिन्यश्च शाखाः ।
वीक्ष्यन्ते यन्मुखानि प्रसभमपगतप्रश्रयाणां खलानां
दुःखोपात्तात्पवित्तस्मयवशपवनानर्तितभ्रूलतानि ॥ ६९ ॥

गङ्गातरङ्गकणशीकरशीतलानि
विद्याधराध्युषितचारुशिलातलानि ।
स्थानानि किं हिमवतः प्रलयं गतानि
यत्सावमानपरपिण्डरता मनुष्याः ॥ ७० ॥

यदा मेरुः श्रीमान्निपतति युगान्ताग्निनिहतः
समुद्राः शुष्यन्ति प्रचुरनिकरग्राहनिलयाः ।
धरा गच्छत्यन्तं धरणिधरपादैरपि धृता
शरीरे का वार्त्ता करिकलभकर्णाग्रचपले ॥ ७१ ॥

एकाकी निस्पृहः शान्तः पाणिपात्रो दिगम्बरः ।
कदा शम्भो भविष्यामि कर्मनिर्मूलनक्षमः ॥ ७२ ॥

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम् ।

---

LXIX. (*a*) निर्झरा वा गिरिभ्यः; पादपाः किं विशीर्णाः. A. (*b*) किंवा वा शोषं गतास्ते गिरिकुहरगता निर्झरा वारिपूर्णाः. A. °स्ता वा तरुभ्यः; स्ताः किं महीजाः K. Bo. (orig. Bo.n.) °लिन्य°; °लेभ्य°. C. °ल्भ्य.° M. (*c*) यन्मु°; किं मु°. K. Bo. (orig. Bo.n.) °म°; °मु°. P. R. C. M. K. (*d*) °त्तात्पाल्प°; °खात्तस्वल्प°. N. वशपवनान°; पवनवशान्न° T. K. Bo. (orig. Bo.n.) G. N. (whoro न for न्न) विषपवनान°. M. In A. another reading is किं तद्वैराग्ययुक्तं सुचारितनिशितो ज्ञानखड्गः प्रनष्टो । येन द्वारे नृपाणां धनमदमलिनां संगतिं यान्ति धीराः ॥

LXX. (*d*) यत्सा°; येना°. A. यत्स्था°. M. रता; गता. A.

LXXI. (*a*) यदा; सदा. M. यतो. N. निहतः; दलितो A. वलितः N. (*b*) निकर; मकर. P. R. N. सलिल. A. (*c*) The third and second lines interchange places in A. (*d*) कल°; कर° A. कर्णा°; कारा° C.

LXXIII. (*b*) दत्तम्; न्यस्तम्. T. K. N. R. P. Bo. (orig. Bo.n.) G. A.

सन्मानिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥ ७३ ॥

जीर्णा कन्था ततः किं सितममलपटं पट्टसूत्रं ततः कि-
मेका भार्या ततः किं हयकरिसुगणैरावृतो वा ततः किम् ।
भक्तं भुक्तं ततः किं कदशनमथवा वासरान्ते ततः किं
व्यक्तज्योतिर्न वान्तर्मथितभवभयं वैभवं वा ततः किम् ॥७४॥

भक्तिर्भवे मरणजन्मभयं हृदिस्थं
स्नेहो न बन्धुषु न मन्मथजा विकाराः ।
संसर्गदोषरहिता विजना वनान्ता
वैराग्यमस्ति किमतः परमर्थनीयम् ॥ ७५ ॥

तस्मादनन्तमजरं परमं विकासि
तद्ब्रह्म चिन्तय किमेभिरसद्विकल्पैः ।
यस्यानुषङ्गिण इमे भुवनाधिपत्य-
भोगादयः कृपणलोकमता भवन्ति ॥ ७६ ॥

---

(*c*) सन्मानिताः; सन्मानिनाम् A. संपादिताः T. K. Bo. G. N. संमानिनाः R. P. Bo.n. °नो; °नाम्. A. °वै°; °वा° T. K. Bo. (orig. Bo.n.) G. (*d*) °ल्पम्; °ल्प°. A. T. Bo. G. °नम्; ताम. A. °ना: T. Bo. (orig. Bo.n.) G. K. N. °तात°; °तस्त° T. Bo. (orig. Bo.n.) G. नुभि.; नवः T. Bo. (orig. Bo.n.) G. K. N. In P. & R. the fourth line is second, second third, and third fourth.

LXXIV. (*a*) जी°; शी° Bo.n. °पटम्; °वरम्. Bo.n. °सुत्रम्; °वस्लम् Bo.n. (*b*) for हयकरि &c. बहुगुणगुणिता कोटिरेका ननः किम् Bo.n. (*c*) भक्तिं भुक्तं ततः किं वदशनमथवा वासरी ते ततः किम्. This line is fourth in Bo.n. (*d*) एकः. श्रान्त (भ्रान्त cod) म्ततः किं करितुरङ्गवरैरावृतो वा ननः किम् Bo.n.

LXXV. (*b*) बन्धु°; वस्तु° A. न म°; च म° T. Bo. G. (*d*) °मतः; °मितः N. मर्थे°; °मार्थे° M. G. T. C. किमतः परमर्थनीयम्; हृदि चेत्परमर्थयन्ति A.

LXXVI. (*a*) °मम्; °मा T. G. °कासि, °वेकम्. C. °काशि A. P. Bo.n. °काशी. M. (*b*) तद्ब्रह्म वाञ्छत जना यदि चेतनस्याः M. (*c*) भु°; भ° A. T. K. Bo. P. R. N. मता; रता M. नमा A.

पातालमाविशसि यासि नभो विलङ्घ्य

दिङ्मण्डलं भ्रमसि मानसचापलेन ।

भ्रान्त्यापि जातु विमलं कथमात्मनीनं

तद्ब्रह्म न स्मरसि निर्वृतिमेषि येन ॥ ७७ ॥

रात्रिः सैव पुनः स एव दिवसो मत्वाबुधा जन्तवो

धावन्त्युद्यमिनस्तथैव निभृतप्रारब्धतत्तत्क्रियाः ।

व्यापारैः पुनरुक्तभुक्तविषयैरेवंविधेनामुना

संसारेण कदर्थिताः कथमहो मोहान्न लज्जामहे ॥ ७८ ॥

मही रम्या शय्या विपुलमुपधानं भुजलता

वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः ।

स्फुरद्दीपश्चन्द्रो विरतिवनितासङ्गमुदितः

सुखं शान्तः शेते मुनिरतनुभूतिर्नृप इव ॥ ७९ ॥

त्रैलोक्याधिपतित्वमेव विरसं यस्मिन्महाशासने

तल्लब्ध्वासनवस्त्रमानघटने भोगे रतिं मा कृथाः ।

LXXVII. (*a*) °ङ्घ्य; °ङ्ग्य Bo.n. (*c*) °नीनम्. °नीनम A. T. Bo. G. °नीनम् C. M. (*d*) तद्ब्रह्म न स्म°; न ब्रह्म संस्म° T. K. Bo. (orig. Bo.n.) G. स ब्रह्म संस्म° N. ये°; के° T. K. Bo. (orig. Bo.n.) G.

LXXVIII. (*a*) बु°; मू.° A. K. Bo. G. N. (*b*) तप्रा°; °ताः प्रा°. T. M. Bo. °तं प्रा°; K. Bo.n. °तः प्रा°. C. G. °तत्तत्क्रि°; °तस्तत्क्रि°. T. (*c*) भुक्त; मुक्त Bo. (orig. Bo.n.) भून. G. N. °रेवम्; °रित्थम्. K. T. Bo. G. N. °रेव. Bo.n. °मु°; °धु°. A. (*d*) °ताः कथ°; °ता वय°. K. T. G. N. Bo. (orig. Bo.n.) °हान्न; °हं न. Bo. (orig. Bo.n.) G. लज्जा°. जानी°. K. T. G.

LXXIX. (*a*) °ही; °हा. N. रम्या; मृद्वी. A. शय्या. T. K. Bo. G. M. N. R. शय्या P. शय्या; पृथ्वी. N. शय्या. R. °पुल°; °तन°. A. (*c*) °स्फुरद्दीप-श्चन्द्रो; शरच्चन्द्रो दीपो. N. (*d*) °वम्; °ती. N. °न्तः; °न्तम् P.

LXXX. (*a*) शासने; शोभनम्. A. (*b*) °स°; °श°. P. A. वस्त्र; मस्तु. A. °सनवस्त्रमानघटने; परितोषमेषि च मनो. Bo,n.

भोगः कोपि स एक एव परमो नित्योदितो जृम्भते
यत्स्वादाद्विरसा भवन्ति विषयास्त्रैलोक्यराज्यादयः ॥८०॥

किं वेदैः स्मृतिभिः पुराणपठनैः शास्त्रैर्महाविस्तरैः
स्वर्गग्रामकुटीनिवासफलदैः कर्मक्रियाविभ्रमैः ।
मुक्त्वैकं भवबन्धदुःखरचनाविध्वंसकालानलं
स्वात्मानन्दपदप्रवेशकलनं शेषा वणिग्वृत्तयः ॥ ८१ ॥

आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्री-
रर्थाः संकल्पकल्पा घनसमयतडिद्विभ्रमा भोगपूराः ।
कण्ठाश्लेषोपगूढं तदपि च न चिरं यत्प्रियाभिः प्रणीतं
ब्रह्मण्यासक्तचित्ता भवत भवभयाम्भोधिपारं तरीतुम् ॥८२॥

ब्रह्माण्डमण्डलीमात्रं किं लोभाय मनस्विनः ।
शफरीस्फुरितेनाब्धेः क्षुब्धता जातु जायते ॥ ८३ ॥

---

(*d*) विषया°; भवन्त°. A. विभवा°. P. R. In Bo. G. N. K. T. the first line is ब्रह्मेन्द्रादिमरुद्गणां (णा. T.) स्तृणगणान्य (य. T.) त्र स्थितो मन्य (न्ज. T.) ते. The second is the fourth above as in P. & R. except यच्छापात् for यत्स्वादात् in Bo. G. T. K. The third is the same as above except बोधः for भोगः in Bo. G. T. K. & एव for एक in N. The fourth line in all is भो (भोः Bo. & K.) साध्वी क्षणभङ्गुरे तदितरे भोगे रतिं मा कृथाः.

LXXXI. (*a*) °ठनै; °ठितैः. T.(*c*) मुक्त्वैकम्; भुक्तैः किम्. G. बन्ध; भार A. भार. M. P. R. दुःख T. K. Bo. G N. दुःख; भार. T. K. Bo. G. N. °स; °सि. A. (*d*) °वे°; °का°. T. K. G. कलनम्; °नमिदम्. A. °षा; °षैः A. Bo.n. N. °त्तयः; °त्तिभिः A. N. Bo.n.

LXXXII. (*b*) °मा; °मो. A. Bo.n. °राः; °रः. C. Bo.n. °गाः K. Bo. G. N. (*c*) °ण्ठा°; °ण्ठ°. T. °च न; न हि P. R. (*d*) °रीतुम्; °रन्तु. T, G. Bo. (orig. Bo.n.) °रन्तः K.

LXXXII. (*a*) °ण्डः ण्डो. Bo. K. किम्; को. Bo. (orig. Bo.n.) K. लोभाय; लाभाय. P. R. लाभोयम्. Bo. K. भोगाय. A. Bo.n. (*b*) जातु; नु प्र° A. °ब्धेः क्षुब्धता जातु जायते. °ब्धिः क्षुब्धो न खलु जायते. N.

यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं
तदा दृष्टं नारीमयमिदमशेषं जगदपि ।
इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥ ८४ ॥

रम्याश्चन्द्रमरीचयस्तृणवती रम्या वनान्तस्थली
रम्यः साधुसमागमः शमसुखं काव्येषु रम्याः कथाः ।
कोपोपाहितबाष्पबिन्दुतरलं रम्यं प्रियाया मुखं
सर्वं रम्यमनित्यतामुपगते चित्ते न किंचित्पुनः ॥ ८५ ।

भिक्षाशी जनमध्यसङ्गरहितः स्वायत्तचेष्टः सदा
दानादानविरक्तमार्गनिरतः कश्चित्तपस्वी स्थितः ।
रथ्याक्षीणविशीर्णजीर्णवसनैः संप्राप्तकन्थासखो
निर्मानो निरहंकृतिः शमसुखाभोगैकबद्धस्पृहः ॥ ८६ ॥

मातर्मेदिनि तात मारुत सखे तेजः सुबन्धो जल
भ्रातर्व्योम निबद्ध एव भवतामेष प्रणामाञ्जलिः ।

LXXXIV. (*b*) °दपि; °द्गिनि. A. K. (*d*) मनु°; ननु°. C. M.

LXXXV. (*a*) °यस्तृणवनी; °यः कुसुमिता A. Bo. n. (*b*) °म्यः; °म्यम्. A. K. Bo. N. R. T. G. P. साधुसमागमः शम°; साधुसमागमोद्भव Bo. n. A. तच्च समानमागम° T. G. साधुसभासमागम K. Bo. साधुसुहृत्समागम. P. R. साधुसमागमागत. N. °ब्यं°; °ले° T. G. (*c*) बिन्दु; वृत्ति T. (*d*) °नित्य°; °रम्य° P. R. °मुप°; °मप°. Bo. n. °मभि° K. °ते; °तम्. A. K. Bo.(orig. Bo. n.).

LXXXVI. (*a*) मध्यसङ्ग; सङ्गमध्य. P. R. चेष्टः; वेशः. A वेषः Bo. n. (*b*) दाना°; हाना° K. Bo. (orig. Bo. n.) N. °रक्त°; °तिक्त°. A. R. P. °भिन्न°. K. Bo. (°क्त Bo.n.) °मार्गनिरतः; °दर्पेरहितः K. Bo. (orig. Bo.n.). (*c*) क्षीण; कीर्ण-K. Bo. N. जीर्ण; चीर. A. Bo. n. कीर्ण P. R. °नैः; °नः N. P. R. °:संप्राप्त; °रास्यूत. K. °रस्यूत; Bo. (orig. Bo.n.) °:प्राप्नोत्य. P. R. सखो; धनो. A. °धरो. K. Bo. °सनो. N. (*d*) °नो; °णो. K. Bo. (orig. Bo.n.) शमसुखा°; समसुखा° Bo. (orig. Bo. n.).

LXXXVII. (*a*) तेजः; ज्योतिः A. K. Bo. P. R. सु°; स्व°. K. Bo. (orig. Bo. n.)(*b*) °व; °ष. A. K. Bo. M. P. R. °मेष; °मये. A. K. Bo. °मन्त्य. M. °मन्त्यः. P. R. N.

युष्मत्सङ्गवशोपजातसुकृतोद्रेकस्फुरन्निर्मल-
ज्ञानापास्तसमस्तमोहमहिमा लीये परे ब्रह्मणि ॥ ८७ ॥

यावत्स्वस्थमिदं कलेवरगृहं यावच्च दूरे जरा
यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः ।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महा-
न्प्रोद्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥ ८८ ॥

नाभ्यस्ता भुवि वादिवृन्ददमनी विद्या विनीतोचिता
खड्गाग्रैः करिकुम्भपीठदलनैर्नाकं न नीतं यशः ।
कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये
तारुण्यं गतमेव निष्फलमहो शून्यालये दीपवत् ॥ ८९ ॥

ज्ञानं सतां मानमदादिनाशनं
केषांचिदेतन्मदमानकारणम् ।
स्थानं विविक्तं यमिनां विमुक्तये
कामातुराणामतिकामकारणम् ॥ ९० ॥

जीर्णा एव मनोरथाः स्वहृदये यातं जरां यौवनं
हन्ताङ्गेषु गुणाश्च वन्ध्यफलतां याता गुणज्ञैर्विना ।

---

(c) °तोद्रेक ; तस्फार; N. (*d*) ज्ञाना° ; ज्वाला°. K. Bo. (orig. Bo. n.) °रे° °र. Bo. (orig. Bo. n.) M.

LXXXVIII. (*a*) कलेवरगृहम्; शरीरमरुजम्. A. T. K. Bo. N. G. P. R. च दूरे जरा; °ज्जरा दूरतो. A. T. K. Bo. G. N. P. R. (*d*) °न्प्रो°; °न्सम् A. T. K. Bo. N. R. G. P. °नु° M. तु; च C. प्र°. G. °नम्; °ने A. M. °द्य°; °द्र° A. M.

LXXXIX. (*a*) भुवि; प्रति° N. वादि; वाद A. G. वृन्द; दन्ति. M. °म°; °ल° M. (*b*) पीठ; दन्त. M. कूट P. R. °ल°; °म° K. G. Bo. (orig. Bo. n.) (*c*) पी°; प्री°. Bo. n. (*d*) निष्फ°; निःफ° P. R.

XCI. (*a*) °थाः स्वा°; °थाश्च. T. K. Bo. N. G. °थः स्व Bo. n. जरायौ°; च नष्टा° A. N. T. K. Bo. G. (*b*) °न्त्य; °ध्य. A.

किं युक्तं सहसाभ्युपैति बलवान्कालः कृतान्तोक्षमी
ह्याज्ञातं स्मरशासनाङ्घ्रियुगलं मुक्त्वास्ति नान्या गतिः ॥९१॥

तृषा शुष्यत्यास्ये पिबति सलिलं स्वादु सुरभि
क्षुधार्तः सञ्छालीन्कवलयति शाकादिवलितान् ।
प्रदीप्ते रागाग्नौ सुदृढतरमाश्लिष्यति वधूं
प्रतीकारो व्याधेः सुखमिति विपर्यस्यति जनः ॥ ९२ ॥

स्नात्वा गाङ्गैः पयोभिः शुचिकुसुमफलैरर्चयित्वा विभो त्वां
ध्येये ध्यानं नियोज्य क्षितिधरकुहरग्रावपर्यङ्कमूले ।
आत्मारामः फलाशी गुरुवचनरतस्त्वत्प्रसादात्स्मरारे
दुःखान्मोक्ष्ये कदाहं तव चरणरतो ध्यानमार्गैकप्रभः ॥ ९३ ॥

शय्या शैलशिला गृहं गिरिगुहा वस्त्रं तरूणां त्वचः
सारङ्गाः सुहृदो ननु क्षितिरुहां वृत्तिः फलैः कोमलैः ।
येषां निर्झरमम्बुपानमुचितं रत्यैव विद्याङ्गना
मन्ये ते परमेश्वराः शिरसि यैर्बद्धो न सेवाञ्जलिः ॥९४॥

---

(c) ॰कालः कृतान्तोऽक्षमी; कालो हि सर्वान्तकृत्. A. Bo.n. (d) ह्या॰; हा N. प॰ Bo. G. न T. K. ज्ञा ; ध्या॰. T. K. स्मरशासनाङ्घ्रियुगलम्; मदनान्तकाङ्घ्रियुगलम्. K. N. Bo. G. मदनान्तकारियुगलम्. T. मधुसूदनाङ्घ्रिकमलम्. P. R. A. Bo.n. (in which two युगलम् for कमलम्) त्रिपुरान्तकाङ्घ्रियुगलम्. M. मुक्त्वास्ति; मुक्तिस्तु T. K. Bo. (orig. Bo.n.) नान्यास्ति. A. नान्या; मुक्त्वा. A.

XCII. (a) शुष्यत्यास्ये, ॰तेः सत्प्राणे A. Bo.n. स्वादु सुरभि; शीतमधुरम्. शीतसुरभि. T. (b) सञ्छालीन्; शाल्यन्नम्, N. मञ्छालिम. Bo.n. शाकादिवलितान्; मस्यादिफलितान्. A. मांसाद्यकवलान्. T. मांसादिकलितम्, N. Bo.n. (c) रागा॰; कामा॰. A. T. Bo.n. ॰श्लिष्यति; ॰लिङ्गति, N. (d) ॰मिति, ॰मिव. M. Bo.n. ॰ति जनः; ॰त्यबुधः. Bo.n.

XCIII. (b) ध्येये ध्यानं नियोज्य; ध्यायन्निर्विश्य पश्यन्, P.R. नियोज्य; निवेश्य A. T. K. Bo G. M. N. पर्यङ्कमूले; शय्यासनस्थः T. K. Bo. (orig. Bo.n.) G. (c) ॰मः फलाशी; ॰मोपलीनो. A, ॰मोपि लीनो Bo.n. ॰मोफलाशी. C. (d) ॰खान्मो॰; ॰खं मो॰. A. T. K. P. R. M. Bo. G. N. तव चरणरतो ध्यानमार्गैकपथः; समकरचरणे पुंसि सेवासमुत्थम्, T. K. Bo. G. N. P. R. समचरणकरे पुंसि सेवासमुत्थम् A. Bo.n. प्रथः; पन्थः M.

XCIV, (c) ॰झ॰; ॰र्क॰ C, ॰त्ये॰; ॰त्यै॰ M. (d) म॰; मा॰. C.

सत्यामेव त्रिलोकीसरिति हरशिरश्चुम्बिनीविच्छटायां
  सद्वृत्तिं कल्पयन्त्यां वटविटपभवैर्वल्कलैः सत्फलैश्च ।
कोऽयं विद्वान्विपत्तिज्वरजनितरुजातीव दुःखासिकानां
  वक्त्रं वीक्षेत दुःस्थे यदि हि न बिभृयात्स्वे कुटुम्बेऽनुकम्पाम् ॥ ९५ ॥

उद्यानेषु विचित्रभोजनविधिस्तीव्रातितीव्रं तपः
  कौपीनावरणं सुवस्त्रममितं भिक्षाटनं मण्डनम् ।
आसन्नं मरणं च मङ्गलसमं यस्यां समुत्पद्यते
  तां काशीं परिहृत्य हन्त विबुधैरन्यत्र किं स्थीयते ॥ ९६ ॥

नायं ते समयो रहस्यमधुना निद्राति नाथो यदि
  स्थित्वा द्रक्ष्यति कुप्यति प्रभुरिति द्वारेषु येषां वचः ।
चेतस्तानपहाय याहि भवनं देवस्य विश्वेशितु-
  र्निर्दौवारिकनिर्दयोक्त्यपरुषं निःसीमशर्मप्रदम् ॥ ९७ ॥

प्रियसखि विपद्दण्डव्रातप्रतापपरम्परा
  परिचयचले चिन्ताचक्रे निधाय विधिः खलः ।
मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालव-
  द्भ्रमयति मनो नो जानीमः किमत्र विधास्यति ॥ ९८ ॥

महेश्वरे वा जगतामधीश्वरे
  जनार्दने वा जगदन्तरात्मनि ।

---

XCV. (*a*) °विच्छ°; °वच्छ°. C. (*b*) सद्वृत्तिम्; सवृत्तम्. M. °न्त्यां वटविटप°; °न्त्याचतट (°न्त्यान्तट? ) बिटपि K. T. P. M. (*c*) °स्वासि°; °खासि° M. (*d*) °क्षे°; °स्थे° C. °स्त्वे कु°; °ञ्चेत्कु° M.

XCVI. (*b*) °ण्डनम्, °ण्डलम्. M.

XCVII. (*d*) र्नो दौवारिकनिर्दयोक्तिपरुषम्°. Bo.n.

XCVIII. (*a*) °खि; °ख° N. (in Nîtis'ataka). Bo.n. °ण्डव्रात; °ण्डयान्त. A. Bo.n. °ण्डाघात. N. प्रताप; प्रपात. A. Bo.n. प्रवात. N. (*b*) °चयचले°; °चपले. C. °चयबले. N. °चयवर्ते. A. °चयवत्ते Bo.n. नि°; वि°. N. (*c*) °व ब°; °व च ब°. C, (*d*) नो जानीमः किमत्र; नो जीर्णाना किमु (?) A.

XCIX. (*a*) °तामधी°; °तां महे°; M. P. R.

तयोर्न भेदप्रतिपत्तिरस्ति मे

तथापि भक्तिस्तरुणेन्दुशेखरे ॥ ९९ ॥

रे कन्दर्प करं कदर्थयसि किं कोदण्डटङ्कारवै

रे रे कोकिल कोमलैः कलरवैः किं त्वं वृथा जल्पसि ।

मुग्धे स्निग्धविदग्धमुग्धमधुरैर्लोलैः कटाक्षैरलं

चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते ॥ १०० ॥

कौपीनं शतखण्डजर्जरतरं कन्था पुनस्तादृशी

निश्चिन्तं सुखसाध्यभैक्षमशनं शय्या श्मशाने वने ।

मित्रामित्रसमानतातिविमला चिन्तातिशून्यालये

ध्वस्ताशेषमदप्रमादमुदितो योगी सुखं तिष्ठति ॥ १०१ ॥

भोगा भङ्गुरवृत्तयो बहुविधास्तैरेव चायं भव-

स्तत्कस्यैव कृते परिभ्रमत रे लोकाः कृतं चेष्टितैः ।

---

(c) न वस्तुभेदप्रतिपत्तिरस्ति मे T. N. न वस्तुनो मे प्रतिपत्तिरस्ति K. Bo. G. न भेदहेतुप्रतिपत्तिरस्ति M. P. R. (in which two °न: प्र°). मे; नौ. A.

C. (a) रे; किम्. A. किम्; रे. A. टङ्कारवै; वटारिनैः (?) A. (b) °लैः; °लम्. A. °वैः, °वम्. A. जल्प°; वल्ग°. A. P. R. (c) °ग्धे; °ग्धैः. A. विदग्धमुग्धमधुरैर्लोलैः; मुग्धाक्षरैर्मधुनरालापैः. A. विदग्धमुग्धमधुरालापैः. P. R. For मुग्ध C. has क्षेप (d). वर्तते; संप्रति. P. R.

CI. (a) °तरम्; °तरा. A. T. Bo. N. °जरम् G. (b) निश्चिन्तम्; नैश्चिन्त्यम्. A. नैश्चिन्त्यम्. T. Bo. N. K. नैश्चिन्त्य G. निश्चिन्तम्. Bo.n. निश्चीनम्. M. सुखसाध्य; सुखसाधु. A. Bo.n. निरपेक्ष. G. N. T. K. Bo. (which two have क्ष्य for क्ष). शय्या; निद्रा T. K. G. N. Bo. (orig. Bo.n.) (c) °तातिविम°; °कारिविरला. A. Bo.n. °ति शू°; °थ शू°. A. M. Bo.n. (ना for न्ता) (d) मदप्रमाद; नमप्रमोद. A. Bo.n (म: प for मप्र). In. T. K. Bo. G. N. these two last lines are as follows: स्वातन्त्र्येण निरङ्कुशं विहरणं शान्तं (स्वान्तं K. Bo. N.) प्रशान्तं मनः (सदा. Bo. G. K. N.) स्थैर्यं योगमहोत्सवेऽपि च यदि त्रैलोक्यराज्येन किम् ।

CII. (b) °स्यैव; °स्येह. A. T. R. P. N. Bo. G. M. K. °मत; °मथ. A. Bo.n. रे; हे. T. K. G. °तं चे°; °तैश्चे°. A. °ष्टितैः; °ष्टितम्. T. K. G. Bo. (orig. Bo.n.)

आशापाशशतोपशान्तिविशदं चेतः समाधीयतां

कामोच्छित्तिवशे स्वधामनि यदि श्रद्धेयमस्मद्वचः ॥१०२॥

धन्यानां गिरिकन्दरे निवसतां ज्योतिः परं ध्यायता-

मानन्दाश्रुजलं पिबन्ति शकुना निःशङ्कमङ्केशयाः ।

अस्माकं तु मनोरथोपरचितप्रासादवापीतट-

क्रीडाकाननकेलिकौतुकजुषामायुः परिक्षीयते ॥ १०३ ॥

आघ्रातं मरणेन जन्म जरया विद्युच्चलं यौवनं

संतोषो धनलिप्सया शमसुखं प्रौढाङ्गनाविभ्रमैः ।

लोकैर्मत्सरिभिर्गुणा वनभुवो व्यालैर्नृपा दुर्जनै

रस्थैर्येण विभूतिरप्यपहृता ग्रस्तं न किं केन वा ॥ १०४ ॥

आधिव्याधिशतैर्जनस्य विविधैरारोग्यमुन्मूल्यते

लक्ष्मीर्यत्र पतन्ति तत्र विवृतद्वारा इव व्यापदः ।

जातं जातमवश्यमाशु विवशं मृत्युः करोत्यात्मसा-

त्तत्किं नाम निरङ्कुशेन विधिना यन्निर्मितं सुस्थितम् ॥१०५॥

---

(*d*) °मो°; °म्यो°. Bo. (orig. Bo.n.) G. °च्छि°; °त्ति°. T. K. N. Bo. G. °शे स्व; °शात्स्व. N. °शस्व°. Bo.n.

CIII. (*a*) नि°; °षु. K. Bo. (orig. Bo.n.) G. T. N. (*b*) जलं; कणान्. T. K. Bo. (orig. Bo.n.) G. N. (*c*) °थोपर°; °थैः परि°. A. M. (*d*) परि°; परम्. A. N. M. Bo. K. G. P. R. पर. T.

CIV. (*a*) °घ्रातम्; °क्रान्तम्. N. T. K. G. Bo. (orig. Bo.n.) °या; °सा N. K. Bo. G. (orig. Bo.n.) विद्युच्चलम्; प्रत्युद्गमम्. A. Bo.n. चात्युज्ज्वलम् N. °ध्यत्युज्ज्वलम् P. R. M. यात्युत्तमम्. K. Bo. G. यात्युल्बणम्. T. (*c*) °कैर्म°; °के म°. R. वनभुवो; °स्तु पवगे. A. °स्तु पवनो. Bo.n °पा; °पैः. A. (*d*) °भूतिर-प्यपहृता; °भूतयोप्युपहता. N. Bo (orig. Bo.n. but ह for हृ ) G. K. °पत्तयो-प्युपहता. T. केन वा; के जनाः M. नेन वा. A.

CV. (*a*) °र्जनस्य विविधैः; °र्वयस्यतितराम्. M. (*b*) पतन्ति तत्र; पतत्रिवद्व. M. °वृत; °विभ्र. Bo.n. द्वारा; ज्वाला. M. व्या°; मा°. K. मा°. T. Bo. orig. Bo. (*c*) जातंजातम्; आयुर्यातम्. K. जाताजातम्. G. (*d*) नाम; केन. T. K. Bo. (orig. Bo.n.) तेन. N. °स्थितम्; °स्थिरम् T. A. K. Bo. (orig. Bo.n.) G.

कृच्छ्रेणामेध्यमध्ये नियमिततनुभिः स्थीयते गर्भमध्ये
कान्ताविश्लेषदुःखव्यतिकरविषमे यौवने विप्रयोगः ।
नारीणामप्यवज्ञा विलसति नियतं वृद्धभावोऽप्यसाधुः
संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किंचित् ॥ १०६ ॥

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं
तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः ।
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते
जीवे वारितरङ्गचञ्चलतरे सौख्यं कुतः प्राणिनाम् ॥ १०७ ॥

ब्रह्मज्ञानविवेकिनोऽमलधियः कुर्वन्त्यहो दुष्करं
यन्मुञ्चन्त्युपभोगकाञ्चनधनान्येकान्ततो निस्पृहाः ।
न प्राप्तानि पुरा न संप्रति न च प्राप्तौ दृढप्रत्ययो
वाञ्छामात्रपरिग्रहाण्यपि परं त्यक्तुं न शक्ता वयम् ॥ १०८ ॥

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रव इव प्रहरन्ति देहम् ।

---

CVI. (*a*) नियमिततनु°; नियमितकृन्° . A. नियमित ननु°. T. मनियमति ननु°. G °र्भमध्ये; °र्भवास. A. T. K. Bo. (र्भवासो. Bo.n.) G. N. °र्भगर्ते. P. R. (*b*) °ख; °खम्. A. °मे°; °मो. Bo. N. °ये. T. G. विप्रयो°; चोपभो°. T. K. Bo. (orig. Bo.n.) N. (*c*) नारीणामप्य°; वामाक्षीणाम°. T. K. Bo. (orig. Bo.n.) G. N. °लस°; °हस°. A. °लंम°. T. K. Bo. G. N. °लंम° Bo.n. नियतम्; वसनौ. A. वसतिः T. K. Bo. G. N. °वोप्य°; °वाप्य°. P. R.

CVII. (*b*) °ल°; °ल्य°. M. (*c*) °योग; °देश. M. सेवा°; देशा°. P. R. (*d*) चञ्चलतरे; बुद्बुदसमे. A. Bo.n.

CVIII. (*a*) °किनोम°; °कानिर्म°. T. K. N. G. दुष्क°; दुःक°. M. (*b*) यन्मु°; ये मु°. A. °न्त्युप°; °न्त्यपि. T. काञ्चन°; भाञ्ज्यपि. A. N. K. Bo. G. P. R. भाज्यपि. T. भोज्यपि M. नि°; निः°. Bo. R. P. (orig. Bo.n.) (*c*) न प्रा°; संप्रा°. T. G. N. (where न for नि immediately following) च; व (वा?) G. °ढप्र°; °ढः प्र°. P. R. Bo.n. °यो; °या. M. K. °यात्. N. (*d*) वाञ्छा; °वस्था. C. °ण्यपि. °नपि. N. परम्; वयम्. T. परि K. Bo. G. (orig. Bo.n.) शक्ता वयम्; तानि क्षमाः T.

CIX. (*b*) °हर°; °विश°; M. °हम्; °ह. A. K. Bo. M.

